।। शिवाभ्यां नमः ।।

# ।। अच्युताष्टकम् ।।

अभिलपननिसर्गादच्युताख्ये भजे त्वां
हरसि मदघबृन्दं त्वद्बुभुक्षावशात्त्वम्।
अघहृदिति तवाम्ब प्रत्युतख्यातिदोऽहं
त्वयि मम वद का वा सङ्गतिर्दैन्यवाचाम्।। १
चिरातीता सान्दीपनितनुभुवः कालभवन-
प्रपत्तिस्तं पित्रोः पुनरगमयत् सन्निधिमिति।
यशः कृष्णस्येदं कथमहह न त्वां रसनया
यदि श्रीकृष्णाख्ये भजति स तदानीं मुनिसुतः।। २
हरेर्यच्चोरत्वं यदपि च तथा जारचरितं
तदेतत् सर्वां हस्ततिहतिकृते सङ्कथनतः।
इतीदं माहात्म्यं मधुमथन ते दीपितमिदं
वदन्त्याः कृष्णाख्ये तवहि विचरन्त्या विलसितम्।। ३
सभायां द्रौपद्यांशुकसृतिभिया तद्रसनया
धृता तस्याश्चेलं प्रतनु तदवस्थं विदधती।
व्यतानीश्शैलाभं वसनविसरं चाम्बहरतां
इयान् गोविन्दाख्ये वद वसनराशिस्तव कुतः।। ४
अधिरसनमयि त्वामच्युताख्ये दधानं
वनजभवमुखानां वन्द्यमाहुर्महान्तः।
स तु विनमति मातश्चाश्वगोश्वादनादीन्
भवति ननु विचित्रा पद्धतिस्तावकानाम्।। ५
जननि मुरभिदाख्ये जाह्नवीनिम्नगैका
समजनि पदपद्माच्चक्रिणस्त्वाश्रितानाम्।
परिणमति समस्ताः पादवार्बिन्दुरेको
जगति ननु तटिन्यो जाह्नवीसह्यजाद्याः।। ६
समवहितपश्यन् सन्निधौ वैनतेयं
प्रसभविधुतपद्मापाणिरीशोऽच्युताख्ये।

समवितुमुपनीतस्सामजेन्द्रं त्वया द्राक्
वद जननि विना त्वां केन वा किं तदाभूत्।। ७

यदेषस्तौमि त्वां त्रियुगचरणत्रायिणि ततो
महिम्नः का हानिस्तव तु मम सम्पन्निरवधिः।
शुना लीढा कामं भवति सुरसिन्धुर्भगवती
तदेषा किं भूता स तु सपदि सन्तापरहितः।। ८

।। इति श्री श्रीधरवेङ्कटाशार्य कृत अच्युताष्टकं समाप्तम् ।।